यक्ष्मं दोषण्य१मंसाभ्यां बाहुभ्यां वि वृहामि ते ॥२॥
आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोर्हृदयादधि ।
यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो वि वृहामि ते ॥३॥
ऊरुभ्यां तेऽष्ठीवद्भ्यां जङ्घाभ्यां प्रपदाभ्याम् ।
यक्ष्मं श्रोणीभ्यां भासदाद्भँसंसो वि वृहामि ते ॥४॥
मेहनाद्वलंकरणाल्लोमभ्यस्ते नखेभ्यः ।
यक्ष्मं सर्वस्मादात्मनस्तमिमं वि वृहामि ते ॥५॥
अङ्गादङ्गाल्लोम्नोलोम्नो जातं पर्वणिपर्वणि ।
यक्ष्मं सर्वस्मादात्मनस्तमिमं वि वृहामि ते ॥६॥
परा देहि शावल्यं ब्रह्मभ्यो वि भजा वसु ।
कृत्यैषा पद्वती भूत्वा जाया विशते पतिम् ॥७॥
अश्लीला तनूर्भवति रुशती पापयामुया ।
पतिर्यद्वध्वै३ वाससा स्वमङ्गमभिधित्संति ॥८॥

4a तेष्ठीवद्भ्यां B. Wh. Bu. P. ते अष्ठी° E. W. Rv.—जंघाभ्यां W. B. Wh. Bu. H. जघाभ्यां E. पार्ष्णिभ्यां Rv. 4b श्रोणीभ्यां B. Wh. T. H. श्रोणीभ्यां W. श्रोणिभ्यां E. Rv. In Bu. it may be read श्रोणि° or श्रोणी°.—भासदाध्वँससो E. P. भासदाद्भँससो W. मासमाध्वँससो B. भासदाद्भँससो Bu. Wh. H. भासदाद्भंससो Rv.—In B. verse 4 precedes verse 3. 5a °द्वलंकर° MSS. and H. °द्वलंकर° Rv. 5b and 6b °स्तमिमं B. W. Wh. Bu. T. H. °स्तमिदं E. Rv. 7a शावल्यं Wh. Bu. T. H. शावुल्यं B. E. शावुल्यं W. शामुल्यं Rv. X, 85, 29. 7b भूत्वा MSS. भूत्वा Rv. l.c. 8a असीला MSS. अश्रीरा Rv. X, 85, 30.—तनुर्भव Wh. Bu. 8b °द्वध्वै MSS. वध्वै वध्वाः H. °द्वध्वो३ Rv. l. c.—°धित्संति E. B. Wh. Bu. H. °धित्संति W.

क्रूरमेतत्कटुकमेतदपाष्ठवद्विषवन्नैतदत्तवे ।
सूर्यां यः प्रत्यक्षं विद्यात्स एतत्प्रति गृह्णीयात् ॥९॥
आशसनं विशसनमथो अधिविचर्तनम् ।
सूर्यायाः पश्य रूपाणि तानि ब्रह्मोत शँसति ॥१०॥

सप्तदशः खण्डः ॥१७॥

अक्षीभ्यां ते ॥ उदसौ ॥ इमां खनामि ॥ प्रातरग्निम् ॥ करोमि ते ॥ विष्णुर्योनिम् ॥
अपश्यं त्वा ॥ उदीर्ष्वातः ॥ इह गावः ॥ शर्म वर्म ॥ यदृते चित् ॥ सत्येन ॥
आ तिष्ठेमम् ॥ सोमाय ॥ सोमः प्रथमः ॥ हिरण्यवर्णाः ॥[1] प्र सु
ग्मन्ता ॥ तानि ब्रह्मोत शँसति ॥[2]

## ॥ इति प्रथमः प्रश्नस्समाप्तः ॥[3]

°धित्संति Rv. l. c. 9a °पाष्ठु° B.—°त्तवि Bu. Hw. 9b विन्द्यात्स E.—Cf. Rv. X, 85, 34. 10a °विचर्त्तनम् Wh. Bu. H. °विपर्तनं B. W. °विकर्त्तनं E. Rv. X, 85, 35. Haradatta seems to explain °थो अधि विपर्तनं. 10b ब्रह्मोत शँसति B. E. Wh. H. ब्रह्मोथ शँ° W. ब्रह्मोद् शं° Bu. ब्रह्मा तु शुंधति Rv. l. c.— सप्तदशः खण्डः Wh. ॥१८॥ अक्षीभ्यां ते विँशतिः ॥१८॥ E. W. B. ॥१८॥ अक्षी नीषा आन्ते जरू मेहनाद्‌ंगाद्‌ंगात्परा देहि सप्त ॥ Bu. T. [1] So according to Wh., except that इह गावः is left out. In E. this list of Khaṇḍa beginnings is omitted. B. W. Bu. have अक्षीभ्यां ते नासिकाभ्यां ॥ उदसौ सूर्यो अगात् (सूर्योगात् Bu.) ॥ इमां खनाम्योषधीं (°खनांभ्योष° W. °खनांभ्योष° B pr. m. °खनांम्योष° B sec. m.) ॥ प्रातरग्निं ॥ करोमि ते प्राजापत्यं ॥ विष्णुर्योनिं कल्पयतु ॥ आ रोहोरुं (रोहरुं Bu.) ॥ अपश्यं त्वा मनसा चेकितानं (W. has only अपश्यं त्वा) ॥ उदीर्ष्वातो विश्वावसो ॥ इह गावः प्र जायध्वं ॥ शर्म वर्मेदमा हर ॥ ता मंदसाना मनुषो दुरोणे (Bu. has य ऋते चिदभिश्रिषः instead of it) ॥ सत्येनोत्तभिता भूमिः ॥ आ तिष्ठेममश्मानं ॥ सोमाय जनिविदे स्वाहा ॥ सोमः प्रथमो विविदे (Bu. adds गन्धर्वः) ॥ हिरण्यवर्णाः शुचयः पावकाः ॥ [2] प्र सु ग्मंता

॥ श्रीगणेशाय नमः ॥ हरिः ओं ॥

उष्णेन वाय उदकेनेह्यदितिः केशान्वपतु ॥१॥

आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे।
ज्योक् च सूर्यं दृशे ॥२॥

येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान्।
तेन ब्रह्माणो वपतेदमस्यायुष्माञ्जरदष्टिर्यथासदयमसौ ॥३॥

येन पूषा बृहस्पतेरग्नेरिन्द्रस्य चायुषेऽवपत्।
तेनास्यायुषे वप सौश्लोक्याय स्वस्तये ॥४॥

धियसानस्य सक्षणि W. प्र सु ग्मंताः धियसानस्य सक्षणि ॥ ९ ॥ हरिः ओं ॥ B. प्र सु ग्मन्ता धियसानस्य सक्षणि। प्र सु ग्मन्ता सोमस्तथेन घर्मं वर्मेदमुदीर्ष्वापक्षग्न्ला-रोहंद विष्णुर्योनिं प्रातरग्निमिमां खनामविध्यामेकादशा ॥ प्र सु ग्मन्ता तानि ब्रह्मोत शंसति ॥ Bu. [3] इति मंत्रप्रश्ने प्रथमप्रश्नः समाप्तः B. इति श्रीमंत्रप्रश्ने कांडे प्रथमः प्रश्नः ॥१॥ W. इति प्रथमपाठा समाप्तः ॥ E. Deest in Bu. Wh. As to T. see Introd., p. xiii.

II, 1, 1 See Av. VI, 68, 1; Pār. II, 1, 6; Āśv. I, 17, 6 seq.; MBr. I, 6, 1. 2a उदंतु B.—See Ts. I, 2, 1, 1; Av. VI, 68, 2; Śāṅkh. I, 28, 9; Pār. II, 1, 9; Āśv. I, 17, 7; MBr. I, 6, 2. 2b See Rv. I, 23, 21. 3b °सदयमसौ E.—See TBr. II, 7, 17, 2; Av. VI, 68, 3; VIII, 5, 21 b; Āśv. I, 17, 10. 4a चायुपेवपत् B.—Cf. MBr. I, 6, 7; Āśv. I, 17, 12.

येन भूयश्चरात्ययं ज्योक् पश्याति सूर्यम् ।
तेनास्यायुषे वप सौश्लोक्याय स्वस्तये ॥५॥
येन पूषा बृहस्पतेरग्नेरिन्द्रस्य चायुषेऽवपत् ।
तेन ते वपाम्यसावायुषा वर्चसा यथा ज्योक् सुमना असाः ॥६॥
यत्क्षुरेण मर्चयता सुपेशसा वप्त्रा वपसि केशान् ।
शुन्धि शिरो मास्यायुः प्र मोषीः ॥७॥
उप्त्वाय केशान्वरुणस्य राज्ञो बृहस्पतिस्सविता सोमो अग्निः ।
तेभ्यो निधानं बहुधान्वविन्दन्नन्तरा द्यावापृथिवी अपस्सुवः ॥८॥

प्रथमः खण्डः ॥१॥

आयुर्दा देव जरसं गृणानो घृतप्रतीको घृतपृष्ठो अग्ने ।
घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे नयेमं स्वाहा ॥१॥
आ तिष्ठेममश्मानमश्मेव त्वं स्थिरो भव ।
अभि तिष्ठ पृतन्यतस्सहस्व पृतनायतः ॥२॥

5 See Âśv. I, 17, 13. 6a °स्य चायुषेवपत् B. °स्य चायुषेवपत् E. 6b °म्यसावा° E.—वर्चसा यथा B. 7a सुपेशसा B. 7b शुंधि शिरो B. T. शुन्धिशिरो E. शुन्धि शि° Wh. HHg. शुन्धि शि° Bu. शुंधि (शुद्धं कुरु) Hw. शुन्धि (शुद्धं कुरु) Hbd. Hbg. See Âśv. I, 17, 16; Pâr. II, 1, 19; Av. VIII, 2, 17. 8b °न्वविंदन्न° E.—सुवः B. E. Wh. T. सुवाः Bu. स्वः H.—प्रथमः खण्डः Wh. ॥१॥ Bu. ॥१॥ उप्त्वाय पञ्चदश ॥१॥ E. B. II, 2, 1b स्वाहा deest in Bu. Wh. T.—Cf. Av. II, 13, 1; TBr. I, 2, 1, 11; Śâṅkh. I, 25, 6. 2a भवा Bu. See I, 5, 1.

रेवतीस्त्वा व्यक्ष्णन्कृत्तिकाश्चाकृन्तँस्त्वा ।
धियोऽवयन्नव ग्ना अवृञ्जन्त्सहस्रमन्ताँ अभितो अयच्छन् ॥३॥
देवीर्देवाय परिधी सवित्रे महत्तदासामभवन्महित्वनम् ॥४॥
या अकृन्तन्नवयन्या अतन्वत याश्च देवीरन्तानभितोऽददन्त ।
तास्त्वा देवीर्जरसे सं व्ययन्त्वायुष्मानिदं परि धत्स्व वासः ॥५॥
परि धत्त धत्त वाससैनँ शतायुषं कृणुत दीर्घमायुः ।
बृहस्पतिः प्रायच्छद्वास एतत्सोमाय राज्ञे परि धातवा उ ॥६॥
जरां गच्छासि परि धत्स्व वासो भवा कृष्टीनामभिशस्तिपावा ।
शतं च जीव शरदः सुवर्चा रायश्च पोषमुप सं व्ययस्व ॥७॥
परीदं वासो अधि धा स्वस्तयेऽभूरापीनामभिशस्तिपावा ।
शतं च जीव शरदः पुरूचीर्वसूनि चार्यो वि भजासि जीवन् ॥८॥
इयं दुरुक्तात्परिबाधमाना शर्म वरूथं पुनती न आगात् ।
प्राणापानाभ्यां बलमाभरन्ती प्रिया देवानाँ सुभगा मेखलेयम् ॥९॥

3a व्यक्ष्णन् E. Bu. Wh. Hbg. P. T. व्यचणन् B. HHg. व्यचिणन् and व्यचिणात् Hw. अव्यक्ष्णन् Hbd. See Introd., p. xxii seq.—°काश्चाकृन्तँस्त्वा E. B. Bu. Wh. P. चक्षतन् Hw. HHg. चक्षंतन् T. Hbd. चक्षन्तन् Hbg. 3b ऽवृञ्जत्स° E. ऽवृञ्जत्स° B. आवृञ्जन् स° Bu. अवृञ्जन् स° Wh. अवावृञ्जन् Hw. त्वा आवृंजन् Hbd. त्वा अवृञ्जन् Hbg. HHg. 5a चक्षतंत्र° E.—°भितोऽददन्त Av. XIV, 1, 45. °भितोददंत E. B. °भितोददन्ता Bu. Cf. MBr. I, 1, 5; Pār. I, 4, 13; Hir. I, 4, 2. 6–8 See Av. II, 13, 2–3; XIX, 24, 4–6; MBr. I, 1, 6. 6b धत्तवा उ E. B. Hir. I, 4, 2. 7a भवतु Bu.—See Hir. I, 4, 2. 8a See Introd., p. xxiii. 8b चार्यो E. See Hir. I, 4, 3. 9 Cf. MBr. I, 6, 27; Pār. II, 2, 8; Śāṅkh. II, 2, 1; Hir. I, 4, 4.

ऋतस्य गोप्त्री तपसः परस्पी घ्नती रक्षस्सहमाना अरातीः ।
सा नस्समन्तमनु परीहि भद्रया भर्तारस्ते मेखले मा रिषाम ॥१०॥
मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरं समिद्धम् ।
अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेऽहम् ॥११॥

द्वितीयः खण्डः ॥२॥

आगन्त्रा समगन्महि प्र सु मृत्युं युयोतन ।
अरिष्टास्सं चरेमहि स्वस्ति चरतादिह स्वस्त्या गृहेभ्यः ॥१॥
समुद्रादूर्मिर्मधुमाँ उदारदुपांशुना सममृतत्वमश्याम् ।
इमे नु ते रश्मयस्सूर्यस्य येभिस्सपित्वं पितरो न आयन् ॥२॥

अग्निष्टे हस्तमग्रभीत्[3]सोमस्ते हस्तमग्रभीत्[4]सविता ते हस्तमग्रभी-[5]त्सरस्वती ते हस्तमग्रभीत्[6]पूषा ते हस्तमग्रभीद्[7]र्यमा[8] ते हस्तमग्र-भीद्[8]अंशस्ते हस्तमग्रभीद्[9]भगस्ते हस्तमग्रभीन्[10]मित्रस्ते हस्तमग्रभीन्[11]मित्र-स्त्वमसि धर्मणाग्निराचार्य[1]स्तव ॥३-१२॥

10a परस्पी Wh. H. P. T. परस्पी B. E. Bu. MBr. I, 6, 28. 10b परेहि E. 11a For बलीयस्तेजो यशस्वि (B. E.) one expects बलीयस्तेजोयशस्वि.—समिद्धं MSS. and H. समृद्धं Sāṅkh. II, 1, 30. See Hir. I, 4, 6, and Introd., p. xxiii. 11b °ज्यजिनं B.
II, 3, 1a °गन्महि प्र सुमृत्युं E.—युयोतना Bu.—See MBr. I, 6, 14; Hir. I, 5, 1. 2a See Rv. IV, 58, 1a; TĀ. X, 10, 2. 2b See Rv. I, 109, 7b, and Introd., p. xxx. 3-12 These are, according to the commentaries on Āp. 10, 12, ten Mantras, and 13-23 are eleven Mantras. So also T. Hw. HHg. have हस्तग्रहणमन्त्राः and परिदानमन्त्राः, but Hbd. हस्तग्रहणमन्त्रः and परिदानमन्त्रः, while Hbg. gives हस्तग्रहणमन्त्रः and परिदानमन्त्राः.

अग्नये त्वा परि ददाम्यसौ[13] सोमाय त्वा परि ददाम्यसौ[14] सवित्रे त्वा परि ददाम्यसौ[15] सरस्वत्यै त्वा परि ददाम्यसौ[16] मृत्यवे त्वा परि ददाम्यसौ[17] यमाय त्वा परि ददाम्यसौ[18] गदाय त्वा परि ददाम्यसावन्तकाय[19] त्वा परि ददाम्यसावद्भ्यस्त्वा[20] परि ददाम्यसावोषधीभ्यस्त्वा[21] परि ददाम्यसौ[22] पृथिव्यै त्वा सवैश्वानरायै परि ददाम्यसौ ॥१३-२३॥ .

देवस्य त्वा सवितुः प्रसव उप नयेऽसौ ॥२४॥

सुप्रजाः प्रजया भूयासुवीरो वीरैस्सुवर्चा वर्चसा सुपोषः पोषैः ॥२५॥

ब्रह्मचर्यमागामुप मा नयस्व देवेन सवित्रा प्रसूतः ॥२६॥

को नामासि ॥२७॥ असौ नामास्मि ॥२८॥ कस्य ब्रह्मचार्यस्यसौ ॥२९॥ प्राणस्य ब्रह्मचार्यस्मि ॥३०॥

The MSS. of the text read अग्निष्टे to °स्तव without a break, and again अग्नये त्वा to °नरायै परि ददाम्यसौ without a break. 3–11 अयहीत् Bu. 8–9 °यभीदृंशस्ते B. 12 कर्मणा° Bu.—°चार्यसवा E. °चार्यस्तव B.—See MBr. I, 6, 15; Hir. I, 5, 9 seq.; Śāṅkh. II, 3, 1. 23 सवैश्वानरायै E. B.—ददाम्यसौ E.—See Hir. I, 6, 5; Śāṅkh. II, 3, 1; MBr. I, 6, 23 seq.; Kauś. 56, 13. 24 नयेसौ B. नयेसौ E. See Introd., p. xxiii.—Cf. Hir. I, 5, 8; Āśv. I, 24, 15; Śāṅkh. II, 2, 12; MBr. I, 6, 18; TĀ. III, 10, 1. 25 भूयासँ E. Hir. I, 5, 13. 26 ब्रह्मचर्य° E.—°मागाम् H. °आ गाम्?—नयस्वा Bu.—See Hir. I, 5, 2; MBr. I, 6, 16; Kauś. 55, 9. 27 को नामा° E.—See Hir. I, 5, 4 seq.; MBr. I, 6, 17; Kauś. 55, 10. 29 ब्रह्मचार्यसौ E. 30 See Hir. I, 6, 3; Āśv. I, 20, 8.

असावेष ते देव सूर्य ब्रह्मचारी तं गोपाय स मा मृतैष ते सूर्य पुत्रस्स दीर्घायुस्स मा मृत । यां स्वस्तिमग्निर्वायुस्सूर्यश्चन्द्रमा आपोऽनु संचरन्ति तां स्वस्तिमनु सं चरासौ ॥३१॥

अध्वनामध्वपते श्रेष्ठस्याध्वनः पारमशीय ॥३२॥

तृतीयः खण्डः ॥३॥

योगेयोगे तवस्तरं वाजेवाजे हवामहे ।
सखाय इन्द्रमूतये ॥१॥
इममग्न आयुषे वर्चसे कृधि प्रियं रेतो वरुण सोम राजन् ।
मातेवास्मा अदिते शर्म यच्छ विश्वेदेवा जरदष्टिर्यथासत् ॥२॥
शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥३॥
अग्निष्ट आयुः प्रतरां दधात्वग्निष्टे पुष्टिं प्रतरां कृणोतु ।
इन्द्रो मरुद्भिर्ऋतुधा कृणोत्वादित्यैस्ते वसुभिरा दधातु ॥४॥

31 स मा मृत । यां Wh. Bu. समामृतयां E. समामृतायां B.—See Hir. I, 6, 3; Âśv. I, 20, 7; Sāṅkh. II, 18, 3. 32 Mantras 26–32 in B. and 27–32 in E. are given without any break, as regards accentuation and Sandhi. Bu. and Wh. mark only the end of 31 a and of 31 by bars.—°शीया Bu.—तृतीयः खण्डः Wh. ॥३॥ Bu. ॥३॥ आगंचा दश ॥३॥ B. ॥११ आगंचा दश ॥३॥ E. II, 4, 1 and 2 Only Wh. gives the two Mantras in full, the other MSS. give the Pratîkas, viz. योगेयोगे तवस्तरमिममग्न आयुषे वर्चसे कृधीति द्वे ॥ See I, 6, 3 (Rv. I, 30, 7), and Ts. II, 3, 10, 3; TBr. II, 7, 7, 5. 3 Rv. I, 89, 9. 4 See Hir. I, 7, 11.

मेधां मह्यमङ्गिरसो मेधां सप्तर्षयो ददुः ।
मेधां मह्यं प्रजापतिर्मेधामग्निर्ददातु मे ॥५॥
अप्सरासु च या मेधा गन्धर्वेषु च यद्यशः ।
दैवी या मानुषी मेधा सा मामा विशतादिह ॥६॥

इमं मे वरुण ॥७॥ तत्त्वा यामि ॥८॥ त्वं नो अग्ने ॥९॥ स त्वं नो अग्ने ॥१०॥ त्वमग्ने अयासि ॥११॥

राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम् ॥१२॥
तत्सवितुर्वरेण्यमित्येषा ॥१३॥

5a सप्त ऋषयो B. T.—See Rv. Khila 29, 1. 6a अप्सरासु या Bu. Wh. 6b मानुषी E.—मामा E.—See Rv. Khila 29, 3; TĀ. X, 41; Hir. I, 8, 4. 7–11 See I, 4, 12–16. 12 राष्ट्रभृद्° E. राष्ट्रभृत° B pr. m. राष्ट्रभृद्° B sec. m.—See Hir. I, 6, 9; 12, 17. 13 All the MSS. give only the Pratīka of the Sāvitrī (Rv. III, 62, 10; Ts. I, 5, 6, 4). According to Āp. 11, 9–12 (see Haradatta on 11, 12, and cf. Hir. I, 6, 11) it has to be recited as follows:

ओं भूस्तत्सवितुर्वरेण्यम् । or, तत्स° . . . °ण्यमों भूः ।
ओं भुवर्भर्गो देवस्य धीमहि । or, भर्गो . . . °महीं भुवः ।
ओं सुवर्धियो यो नः प्रचोदयात् । or, धियो . . . °यादों सुवः ।
ओं भूस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । or, तत्स° . . . महीं भूः ।
ओं भुवर्धियो यो नः प्रचोदयात् । or, धियो . . . °यादों भुवः ।
ओं सुवस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥
or, तत्स° . . . °यादों सुवः ॥

अवृधमसौ सौम्य प्राण स्वं मे गोपाय ॥१४॥
ब्रह्मण आणी स्थः ॥१५॥

तुरीयः खण्डः ॥४॥

सुश्रवसुश्रवसं मा कुरु यथा त्वँ सुश्रवसुश्रवा अस्येवमहँ सुश्रवसुश्रवा भूयासं यथा त्वँ सुश्रवो देवानां निधिगोपो ऽस्येवमहं ब्राह्मणानां ब्रह्मणो निधिगोपो भूयासम् ॥१॥

स्मृतं च मेऽस्मृतं च मे तन्म उभयं व्रतं[2] निन्दा च मेऽनिन्दा च मे तन्म उभयं व्रतँ[3] श्रद्धा च मेऽश्रद्धा च मे तन्म उभयं व्रतं[4] विद्या च मेऽविद्या च मे तन्म उभयं व्रतँ[5] श्रुतं च मेऽश्रुतं च मे तन्म उभयं व्रतँ[6] सत्यं च मेऽनृतं च मे तन्म उभयं व्रतं[7] तपश्च मेऽतपश्च मे तन्म उभयं व्रतं[8] व्रतं च मेऽव्रतं च मे तन्म उभयं

14 सौम्य प्राणस्वं E. सौम्यः प्राणः स्वं B. सोम्य प्राणस्वं Wh. सौम्य प्राणस्वं Bu. As to Visarga before s, see above note on I, 12, 6a. The text of H. is corrupt, but he seems to explain सौम्य as a vocative, and प्राणः as a nominative. 15 तुरीयः खण्डः Wh. ॥४॥ Bu. योगेयोगे चयोदश ॥४॥ E. B. II, 5, 1 सुश्रवः सुश्रवसं E.—सुश्रवः सुश्रवा E. सुश्रवः सुश्रवा B.—सुश्रवः सुश्रवा भू° E. सुश्रवः सुश्रवाँ भू° B.—सुश्रवाँ देवानां E. सुश्रवः सुश्रवाँ देवानां B.—°गोपोऽसि° B. E.—See MBr. I, 6, 31; Āśv. I, 22, 21; Pār. II, 4, 2; Kauś. 56, 3. 2 B. inserts स्मृतं निन्दा (निदाः pr. m.) श्रद्धा विद्या (विद्याः pr. m.) श्रुतँ सत्यं तपो व्रतं at the beginning of this Mantra. See Āśv. III, 9, 1 with Nārāyaṇa's commentary. 2–9 उभयं व्रतं B sec. m. उभयव्रतं B pr. m. उभयव्रतं E. °उभयं व्रतं Wh. उभयव्रतं Bu. 8 तपश्च E. तपश्च to व्रतं deest in Wh.

व्रतं[९] यद्ब्राह्मणानां ब्रह्मणि व्रतम्। यदग्नेस्सेन्द्रस्य सप्रजापतिकस्य सदेवस्य सदेवराजस्य समनुष्यस्य समनुष्यराजस्य सपितृकस्य सपितृराजस्य सगन्धर्वाप्सरस्कस्य। यन्म आत्मन आत्मनि व्रतं तेनाहँ सर्वव्रतो भूयासम् ॥१०॥

उदायुषा स्वायुषोदोषधीनाँ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताँ अनु ॥११॥

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ॥१२॥

पश्येम शरदश्शतं[१३] जीवेम शरदश्शतं[१४] नन्दाम शरदश्शतं[१५] मोदाम शरदश्शतं[१६] भवाम शरदश्शतँ[१७] शृणवाम शरदश्शतं[१८] प्र ब्रवाम शरदश्शतमजीता[१९] स्याम शरदश्शतं[२०] ज्योक्च सूर्यं दृशे ॥२१॥

यस्मिन्भूतं च भव्यं च सर्वे लोकास्समाहिताः।
तेन गृह्णामि त्वामहं मह्यं गृह्णामि त्वामहं प्रजापतिना त्वा मह्यं गृह्णाम्यसौ ॥२२॥

पञ्चमः खण्डः ॥५॥

परि त्वाग्ने परि मृजाम्यायुषा च धनेन च। सुप्रजाः प्रजया

10 सदेवराजन्यस्य E. — °प्सरस्कास्य E. 11 See Ts. I, 2, 8, 1; Hir. I, 7, 10. 12-21 TA. IV, 42, 5 (32); cf. Rv. VII, 66, 16; Hir. I, 7, 10. See Introd., p. xxxiv. 22 b गृण्हाम्यसौ B.—पञ्चमः खण्डः ॥ Wh. ॥५॥ Bu. ॥५॥ सुश्रवसः सुश्रवसमष्टौ ॥५॥ B. ॥८॥ सुश्रवः सुश्रवा अष्टौ ॥५॥ E.

भूयासँ सुवीरो वीरैस्सुवर्चा वर्चसा सुपोषः पोषैस्सुगृहो गृहैस्सु-
पतिः पत्या सुमेधा मेधया सुब्रह्मा ब्रह्मचारिभिः ॥१॥

अग्नये समिधमाहार्षं बृहते जातवेदसे यथा त्वमग्ने समिधा
समिध्यस एवं मामायुषा वर्चसा सन्या मेधया प्रजया पशुभिर्ब्र-
ह्मवर्चसेनान्नाद्येन समेधय स्वाहा ॥२॥

एधोऽस्येधिषीमहि स्वाहा ॥३॥

समिदसि समेधिषीमहि स्वाहा ॥४॥

तेजोऽसि तेजो मयि धेहि स्वाहा ॥५॥

अपो अद्यान्वचारिषँ रसेन समसृक्ष्महि ।
पयस्वाँ अग्न आगमं तं मा सँ सृज वर्चसा स्वाहा ॥६॥

सं माग्ने वर्चसा सृज प्रजया च धनेन च स्वाहा ॥७॥

विद्युन्मे अस्य देवा इन्द्रो विद्यात्सह ऋषिभि स्वाहा ॥८॥

अग्नये बृहते नाकाय स्वाहा ॥९॥

द्यावापृथिवीभ्याँ स्वाहा ॥१०॥

II, 6, 1b सुब्रह्मा ब्र॰ E. 2 ॰माहारिषं Bu. Wh. Hw. ॰माहर्षं Hbg.—समिधय E. — See Av. XIX, 64, 1 seq.; Hir. I, 7, 2; MBr. I, 6, 32; Pār. II, 4, 3; S'āṅkh. II, 10, 4. 3–5 See Ts. I, 4, 45, 3; TBr. II, 6, 6, 4 seq.; S'āṅkh. II, 10, 4. 6a अपो अद्यान्व॰ Wh. Bu. P. अपो अद्य अप इति कर्म्मनाम etc. H. अपो अद्या अन्व॰ T. अपो अन्व॰ Ts. I, 4, 45, 3; 46, 2; TBr. II, 6, 6, 5. आपो अद्यान्व॰ B. E. Rv. I, 23, 23; X, 9, 9. 6b सृजा Bu. 7 See Rv. I, 23, 24a. 8 विद्युन्मे MSS. and H. विद्युर्मे Rv. I, 23, 24b. See Introd., p. xxiv.—विद्यात्सहर्षिभिः E. T. ॰त्सहर्षिभि Bu. Wh.

एषा ते अग्ने समित्तया वर्धस्व चा प्यायस्व च तयाहं वर्धमानो भूयासमाप्यायमानश्च स्वाहा ॥११॥
यो माग्ने भागिनँ सन्तमथाभागं चिकीर्षति ।
अभागमग्ने तं कुरु मामग्ने भागिनं कुरु स्वाहा ॥१२॥
समिधमाधायाग्ने सर्वव्रतो भूयासँ स्वाहा ॥१३॥
ब्रह्मचार्यस्यपोऽशान कर्म कुरु मा सुषुप्थाः ।
भिक्षाचर्यं चराचार्याधीनो भव ॥१४॥
यस्य ते प्रथमवास्यँ हरामस्तं त्वा विश्वे अवन्तु देवाः ।
तं त्वा भ्रातरस्सुवृधो वर्धमानमनु जायन्तां बहवस्सुजातम् ॥१५॥

षष्ठः खण्डः ॥६॥

11 समित्तया E. समत्तया Bu.—See Hir. I, 8, 4. 12 भागिनँ संतम° E.—चिकीर्षति । अ° Wh. चिकीर्षसि अ° E. °र्षत्यभा° B. Bu. T. 13 समिध° E.—At the end of this Mantra B. and Wh. insert: भूः (भू B pr. m. Wh.) स्वाहा भुवः (भुव Wh.) स्वाहा सुवः (सुव Wh.) स्वाहोँ (°हा ओं Wh.) स्वाहा ॥ Haradatta does not mention the Vyāhṛtis (given also in P.) here. But in his commentary on Āp. 11, 22, he says: व्याहृतिभिरप्यन्ते चतस्रः समिध आदधाति । तत्प्रायश्चित्तत्वे न द्रष्टव्यम् । कल्पान्तरदर्शनाच्च । यत्ते अग्न इत्यादिभिरुपस्थानं च ॥ 14a °र्यस्यपोऽशान E.—सुषुप्थाः B. E. 14b भिक्षाचर्यं E.—See Pār. II, 3, 2; Śāṅkh. II, 4, 5; Hir. I, 5, 10; Āśv. I, 22, 2; MBr. I, 6, 25 seq.; Kauś. 56, 12. 15a प्रथमावास्यँ E. 15b भ्रातरँ B pr. m.—सुवृधो B.—जायतां B.—See Av. II, 13, 5; Hir. I, 7, 17.—षष्ठः खण्डः Wh. ॥६॥ Bu. ॥२१॥ परि त्वाम एकविंशतिः ॥६॥ E. ॥६॥ परि त्वाम एकान्नविंशतिः ॥ B.

इ॒मँ स्तोम॒मर्ह॑ते जा॒तवे॑दसे॒ रथ॑मिव॒ सं म॑हेमा मनी॒षया॑ ।
भ॒द्रा हि नः॒ प्रम॑तिरस्य सँस॒द्यग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥१॥
त्र्या॒यु॒षं ज॒मद॑ग्नेः क॒श्यप॑स्य त्र्या॒यु॒षम् ।
यद्दे॒वानां॑ त्र्या॒यु॒षं तन्मे॑ अस्तु त्र्या॒यु॒षम् ॥२॥

शि॒वो नामा॑सि॒ स्वधि॑तिस्ते पि॒ता नम॑स्ते अस्तु॒ मा मा॑ हिँसीः ॥३॥

उ॒ष्णेन॑ वायवु॒दके॒नेत्ये॒षः ॥४-११॥

इ॒दम॒हम॒मुष्या॑मुष्याय॒णस्य॑ पा॒प्मान॒मप॑ गूहा॒म्युत्त॑रो॒ऽसौ द्वि॒षद्भ्यः॑ ॥१२॥

आपो॒ हि ष्ठा म॑यो॒भुव॒स्ता न॑ ऊ॒र्जे द॑धातन ।
म॒हे रणा॑य॒ चक्ष॑से ॥१३॥
यो वः॑ शि॒वत॑मो॒ रस॒स्तस्य॑ भाजयते॒ह नः॑ ।
उ॒श॒तीरि॑व मा॒तरः॑ ॥१४॥
तस्मा॒ अरं॑ गमाम वो॒ यस्य॒ क्षया॑य॒ जिन्व॑थ ।
आपो॑ ज॒नय॑था च नः ॥१५॥

II, 7, 1b सख्ये E.—Rv. I, 94, 1. 2 त्रियायुषं B. P. T. त्र्यायुषं (the last time only) E.—See Hir. I, 9, 6; MBr. I, 6, 8; Vs. III, 62 (Pār. I, 16, 7; II, 1, 15); Av. V, 28, 7a. 3 Cf. Vs. III, 63; Hir. I, 9, 10; S'āṅkh. I, 28, 14. 4-11 वाय उदु॰ B.—इत्येषः viz. षानुवाकः, i.e. the whole of II, 1 is to be repeated here. See Sudars'anārya on Āp. 12, 3. 12 ॰अमुष Bu. T. ॰अमव Hir. I, 9, 18. 13-15 The MSS. of the text have only आपो॒ हि ष्ठा म॑यो॒भुव॒ इति॑ तिस्रः, but H. explains the three verses.

हिरण्यवर्णाः शुचयः पावका इति तिस्रः ॥१६-१८॥

अन्नाद्याय व्यूहध्वं दीर्घायुरहमन्नादो भूयासम् ।
सोमो राजायमागमत्स मे मुखं प्र वेक्ष्यति भगेन सह वर्चसा ॥१९॥

सोमस्य तनूरसि तनुवं मे पाहि स्वा मा तनूरा विश ॥२०॥

नमो ग्रहाय चाभिग्रहाय च नमः शाकजञ्जभाभ्यां नमस्ताभ्यो देवताभ्यो या अभिग्राहिणीः ॥२१-२३॥

अप्सरस्सु यो गन्धो गन्धर्वेषु च यद्यशः ।
दैवो यो मानुषो गन्धस्स मा गन्धस्सुरभिर्जुषताम् ॥२४॥

इयमोषधे त्रायमाणा सहमाना सहस्वती ।
सा मा हिरण्यवर्चसं ब्रह्मवर्चसिनं मा करोतु ॥२५॥

अपाशोऽस्युरो मे मा सं शारीः ।
शिवो मोप तिष्ठस्व दीर्घायुत्वाय शतशारदाय ।
शतं शरद्भ्य आयुषे वर्चसे जीवात्वै पुण्याय ॥२६॥

See Rv. X, 9, 1–3; Ts. IV, 1, 5, 1; V, 6, 1, 4; VII, 4, 19, 4; TĀ. IV, 42, 4; X, 1, 11 seq.; Hir. I, 10, 2; 21, 5; II, 18, 9. 16-18=I, 2, 1-3. 19a °द्याय व्यूहध्वं B.—दीर्घायुर्° E. 19b °गमात्स B pr. m.—मुख्यं Bu.—वेक्ष्यसि B. T.—See Hir. I, 10, 1; Pâr. II, 6, 17. 20 तनुमा B.—सा T.—विशा Bu.—See Hir. I, 10, 5. 21 नमो गृहाय E. 21–23 See Hir. I, 10, 4. 24a अप्सरस्सु च यो Bu. P. अप्सरासु च यो Hir. I, 10, 4. 25a इयमोषधे B. P. T. इयमोषध E. यमोषधे Wh. इयमोषधि Bu. ओषधे ओषधीः विभक्तिलोपश्छान्दसः H. See Introd., p. xxiv. 25b ब्रह्मवर्चस्विनं B pr. m. 26a See Hir. I, 11, 3. 26b, c See TBr. I, 2, 1, 19 seq.

रेवतीस्त्वा व्यक्ष्णन्नित्येताः ॥२७-३२॥

सप्तमः खण्डः ॥७॥

आयुष्यं वर्चस्यँ सुवीर्यं रायस्पोषमौद्भिद्यम् ।
इदँ हिरण्यं वर्चस्वज्जैत्र्यायाविशतान्माम् ॥१॥
उच्चैर्वादि पृतनाजि सत्रासाहं धनंजयम् ।
सर्वास्समृद्धीर्ऋद्धयो हिरण्येऽस्मिन्त्समाहिताः ॥२॥
शुनमहँ हिरण्यस्य पितुरिव नामाग्रभैषम् ।
तं मा हिरण्यवर्चसं पूरुषु प्रियं कुरु ॥३॥
प्रियं मा देवेषु कुरु प्रियं मा ब्रह्मणे कुरु ।
प्रियं विश्येषु शूद्रेषु प्रियँ राजसु मा कुरु ॥४॥

27-32 = II, 2, 3-8. व्यक्ष्णन्नित्येषा E. व्यर्चणंनित्येताः B.—सप्तमः खण्डः ॥ Wh. ॥७॥ Bu. ॥२०॥ इमँ स्तोमं विँशतिः ॥७॥ E. B. II, 8, 1a आयुष्यं B.—वर्चस्यँ B. वर्च्यस्यं Bu. 1b वर्चस्वज्जै° B. वर्चस्वत् deest in Wh. Bu. H. T.—°जैत्राया E.—विशतान्मां Bu. विशतान्मा Wh. T. विंशतामां E. विंशतां मां B. P. विशतात् मा H.—See Hir. I, 10, 6; Vs. XXXIV, 50; Āśv. III, 8, 21, and Stenzler's note in his German translation; Ṛv. Khila 27, 1; Ṛv.-Ms., fol. 62a. 2a उच्चैर्वादि B. उच्चैर्वादि Bu. Hbd. Hbg. HHg. T., probably H. उच्चैर्वाजि E. Wh. Hw. 2b समृद्धि° E. Bu. P. T. समृद्धि° Wh.— See Hir. l.c.; Āśv. l.c.; Ṛv. Khila 27, 2; Ṛv.-Ms. l.c. 3a हिरण्यस्यपितुरिव E. 3b पूरुषु Wh. H. T. पुरुषु B. E. पुरुष Bu. — See Hir. l.c.; Āśv. l.c.; Ṛv. Khila 27, 3; Ṛv.-Ms. l.c. 4a ब्रह्मणे MSS. and H. ब्रह्मणि Hir. l.c. See Introd., p. xxiv. 4b विश्येषु B.

या ति॒रश्ची॑ नि॒पद्य॑से॒ऽहं वि॒धर॑णी॒ इति॑ ।
तां त्वा॑ घृ॒तस्य॒ धार॑या॒ यजे॑ सँ॒राध॑नीम॒हम् ॥५॥
सँ॒राध॑न्यै दे॒व्यै स्वाहा॑ ॥६॥
प्र॒साध॑न्यै दे॒व्यै स्वाहा॑ ॥७॥
स॒म्राजं॑ च वि॒राजं॑ चाभि॒श्रीर्या॑ च॑ नो गृ॒हे ।
ल॒क्ष्मी रा॒ष्ट्रस्य॒ या मुखे॒ तया॑ मा॒ सँ सृ॒जाम॑सि ॥८॥
शु॒भि॒के॑ शिर॒ आ रो॑ह शो॒भय॑न्ती॒ मुखं॒ मम॑ ।
मुखँ॑ हि॒ मम॑ शोभय॒ भूयाँ॑सं च॒ भगं॑ कुरु ॥९॥
यामाह॑रज्ज॒मद॑ग्निः श्र॒द्धायै॑ का॒माया॒न्यै ।
इ॒मां ताम॑पि॑ नह्ये॒ऽहं भगे॑न स॒ह वर्च॑सा ॥१०॥
यदाञ्ज॑नं त्रैककु॒दं जा॒तँ हि॒मव॑त उ॒परि॑ ।
तेन॑ वामाञ्जे॒ तेज॑से॒ वर्च॑से॒ भगा॑य च ॥११॥

अष्टमः खण्डः ॥८॥

5-7 See Hir. I, 2, 18; MBr. I, 5, 6; Bṛh. Up. VI, 3, 3. 5b संराधिनीमहं Bu. Hbd. Hbg. °राधनिमहं B. T. 6 संराधिन्यै Bu. सम्राधन्यै Wh. 7 प्रसाधिन्यै Bu. 8 संम्राजं Bu. Hw. P. T.—See Āśv. l.c.; Rv. Khila 27, 4; Rv.-Ms. l.c.; Hir. I, 11, 1. 9 See Hir. I, 11, 4, and Sāyaṇa, Rigveda-Bhāshya, vol. i, p. 3, l. 19 (Prof. Max Müller's 2nd ed.). 10a कामायान्यै Wh. Hw. 10b त्वामपि Bu. Wh. See Hir. I, 11, 4. 11a TĀ. VI, 10, 2; Av. IV, 9, 9. 11b भगाय च Bu. Wh. भगाय B. H. बलाय च E. T. See Hir. I, 11, 5.—अष्टमः खण्डः ॥ Wh. ॥ ८ ॥ Bu. आयुर्ध्वमिकान्न (°मेकोन्न° B.) विंशतिः ॥ ८ ॥ E. B.

मयि पर्वतपूरुषं मयि पर्वतवर्चसं मयि पर्वतभेषजं मयि पर्वतायुषम् ॥१॥

यन्मे वर्चः परागतमात्मानमुपतिष्ठति ।
इदं तत्पुनरा ददे दीर्घायुत्वाय वर्चसे ॥२॥

प्रतिष्ठे स्थो देवतानां मा मा सं ताप्तम् ॥३॥

प्रजापतेश्शरणमसि ब्रह्मणश्छदिर्विश्वजनस्य छायासि सर्वतो मा पाहि ॥४॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा ददे द्विषतो वधायेन्द्रस्य वज्रोऽसि वार्घ्रघ्नश्शर्म मे भव यत्पापं तन्नि वारय ॥५॥

देवीष्षडुर्वीरुरु णः कृणोत विश्वे देवास इह वीरयध्वम् ।
मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् ॥६॥

राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम् ॥७॥
राष्ट्रभृदसि सम्राडासन्दी मा त्वद्योषम् ॥८॥
राष्ट्रभृदस्यधिपत्न्यासन्दी मा त्वद्योषम् ॥९॥

II, 9, 2a °तिष्ठति Wh. °तिष्ठतु T. 3 देवाणां B. देवते Hir. I, 11, 9. Cf. Pār. II, 6, 30; Āśv. III, 8, 19. 4 See Hir. I, 11, 10; Pār. II, 6, 29. 5 See Ts. VII, 1, 11, 1; V, 7, 3, 1; Hir. I, 11, 7. 6 The MSS. of the text give only the Pratīka, देवीः षडुर्वीरिति द्विषा. See Rv. X, 128, 5; Ts. IV, 7, 14, 2. 7 राष्ट्रभृतस्था° B pr. m. See II, 4, 12. 8 संम्राडा° B. E. Bu. Hw. Hbg. T. 9 °पत्नी सन्दी Wh.—The three Mantras 7-9 are given without any break in B. E. Bu.

आपः पादावनेजनीर्द्विषन्तं नाशयन्तु मे ।
अस्मिन्कुले ब्रह्मवर्चस्यसानि ॥१०॥

मयि महो मयि यशो मयीन्द्रियं वीर्यम् ॥११॥

आ मा गन्यशसा वर्चसा सँ सृज पयसा तेजसा च ।
तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम् ॥१२॥

विराजो दोहोऽसि विराजो दोहमशीय मम पद्याय वि
राज ॥१३॥

समुद्रं वः प्र हिणोमि स्वां योनिमपि गच्छत ।
अच्छिद्रः प्रजया भूयासं मा परा सेचि मत्पयः ॥१४॥

नवमः खण्डः ॥९॥

त्रय्यै विद्यायै यशोऽसि यशसो यशोऽसि ब्रह्मणो दीप्तिरसि ।
तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम् ॥१॥

आ मा गन्नित्येषा ॥२॥

अमृतोपस्तरणमसि ॥३॥

अमृतापिधानमसि ॥४॥

10a पादावनेजनीर्द्विषंतं E. °नीर्द्विषंतं B.—See Ait. Br. VIII, 27, 9; Kauś. 90, 11. 11 वीर्य E. 12 See Hir. I, 13, 3; Pār. I, 3, 15. 13 पद्याय MSS. and H. पद्यायै Hir. I, 13, 1; Pār. I, 3, 12; Āśv. I, 24, 20-22; Śāṅkh. III, 7, 5. 14a °मपि गच्छता Bu. See Pār. I, 3, 14; Hir. I, 13, 4.—नवमः खण्डः ॥ Wh. ॥९॥ Bu. मयि पर्वतपूरुषं योधय ॥९॥ E. B. II, 10, 1a यशोसि यशसि ॥ ब्र° E. 1b and 2 = II, 9, 12. 3 and 4 are not separated in the MSS. See TĀ. X, 32; 35; Hir. I, 13, 6; 9; Āśv. I, 24, 13; 28.

यन्मधुनो मधव्यं परममन्नाद्यं वीर्यम् ।
तेनाहं मधुनो मधव्येन परमेणान्नाद्येन वीर्येण परमोऽन्नादो
मधव्योऽसानि ॥५॥
गौरस्यपहतपाप्मापं पाप्मानं जहि मम चामुष्य च ॥६॥
अग्निः प्राश्नातु प्रथमस्स हि वेद यथा हविः ।
अरिष्टमस्माकं कृण्वन्ब्राह्मणो ब्राह्मणेभ्यः ॥७॥
यज्ञो वर्धतां यज्ञस्य वृद्धिमनु वर्धापचितिरस्यपचितिं मा
कुर्वपचितोऽहं मनुष्येषु भूयासम् ॥८॥
गौर्धेनुभव्या माता रुद्राणां दुहिता वसूनां स्वसादित्यानाम-
मृतस्य नाभिः ॥९॥
प्र णु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ॥१०॥
पिबतूदकं तृणान्यत्तु ॥११॥

5a यन्मधुनामधव्यं E.—वीर्यं E. 5b परमो (मा pr. m.) न्नादो B. ॰परमो-न्नादो E.—See Hir. I, 13, 8; Pār. I, 3, 20. 6 गौरस्यपहतपा॰ E.—॰पाप्मा पाप्मानं Wh. ॰पात्माप पात्मानं Bu. — See Hir. I, 13, 13; Pār. I, 3, 27 seq.; Āśv. I, 24, 31. 7a See TBr. II, 4, 8, 7; Pār. III, 1, 4; MBr. II, 1, 15. 7b अरिष्टम॰ Bu. Wh. Hw. अनिष्टम॰ B. अनिर्ष्टम॰ E. अनष्टम॰ Hbg. T. अरिष्टम॰ in Hbd. seems to have been corrected from अनष्टम॰. 8 वृद्धापचित्तिर॰ Bu. वृद्धापचितिर॰ T.—मनुष्वेषु E. 9 गौर्धेनुभव्या E. Bu. Wh. Hw. Hbd. T. P. गौर्धेनुर्भ (भ pr. m.) व्या B. गौः धेनुः भव्या Hbg. See Hir. I, 13, 12 and Prof. Kirste's note; Pār. I, 3, 27. As to धेनुभव्या see Āp. Dh. I, 31, 12, Gaut. IX, 19. 10 णु वोचं E.—See Hir. l.c.; Pār. l.c. 11 See Hir. l.c.; Pār. I, 3, 28. — According to Sudarśanārya on Āp. 13, 17, Mantras 8–11 would be only three. T. counts 9 and 10 as one Mantra.

ओमुत्सृजत ॥१२॥

भूतम् ॥१३॥ सा विराट् ॥१४॥ तन्मा क्षायि ॥१५॥ तस्य तेऽशीय ॥१६॥ तन्म ऊर्जं धाः ॥१७॥ ओं कल्पयत ॥१८॥

दशमः खण्डः ॥१०॥

धाता ददातु नो रयिमीशानो जगतस्पतिः ।
स नः पूर्णेन वावनत् ॥१॥
धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनं जजान ।
धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवद्विधेम ॥२॥
धाता ददातु नो रयिं प्राचीं जीवातुमक्षिताम् ।
वयं देवस्य धीमहि सुमतिं सत्यराधसः ॥३॥
धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे ।
तस्मै देवा अमृतास्सं व्ययन्तां विश्वे देवासो अदितिस्सजोषाः ॥४॥
यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि ।
जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम् ॥५॥

12 °त्सृजता Bu.—See Hir. l.c.; Pār. l.c. 13 भूतं सुभूतं Wh. See Hir. I, 13, 14 seq. 15-17 तन्मा चापि तस्य तेशीयं तन्म° B. यन्मा चायि तस्य तेशीय तन्म E.—See Hir. I, 13, 15. 18 दशमः खण्डः ॥ Wh. ॥१०॥ Bu. ॥१०॥ चन्द्रे विषाया अष्टादश ॥१०॥ B. ॥१८॥ चन्द्रे विषायाष्टादश ॥१०॥ E. II, 11, 1-8 धाता ददातु नो रयिमिति चतस्रो यस्त्वा हृदा कीरिणेति चतस्रः MSS. I have given Mantras 1-4 from Ts. III, 3, 11, 2 seq., and 5-8 from Ts. I, 4, 46, 1 seq. Haradatta explains them fully.

यस्मै त्वँ सुकृते जातवेद उ लोकमग्ने कृणवः स्योनम् ।
अश्विनँ स पुत्रिणं वीरवन्तं गोमन्तँ रयिं नशते स्वस्ति ॥६॥
त्वे सु पुत्र शवसोऽवृत्रन्कामकातयः ।
न त्वामिन्द्राति रिच्यते ॥७॥
उक्थउक्थे सोम इन्द्रं ममाद नीथेनीथे मघवानँ सुतासः ।
यदीँ सबाधः पितरं न पुत्रास्समानदक्षा अवसे हवन्ते ॥८॥
भूर्भुवस्सुवः ॥९॥
राकामहँ सुहवाँ सुष्टुती हुवे शृणोतु नस्सुभगा बोधतु त्मना ।
सीव्यत्वपस्सूच्याच्छिद्यमानया ददातु वीरँ शतदायमुक्थ्यम् ॥१०॥
यास्ते राके सुमतयस्सुपेशसो याभिर्ददासि दाशुषे वसूनि ।
ताभिर्नो अद्य सुमना उपागहि सहस्रपोषँ सुभगे रराणा ॥११॥
यौगन्धरिरेव नो राजेति साल्वीरवादिषुः ।
विवृत्तचक्रा आसीनास्तीरेण यमुने तव ॥१२॥
सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः ।
विवृत्तचक्रा आसीनास्तीरेणासौ तव ॥१३॥
पुँसुवनमसि ॥१४॥

9–11 भूर्भुवस्सुवो राकामहं यास्ते राके MSS. The Mantras, which are explained by H., are given from Ṛv. II, 32, 4 seq. = Ts. III, 3, 11, 5. 12a यौगंधरिरेव B. Bu. H. T. गौगांधरीरेव E. यौगन्धिनिरेव Wh. See Kāśikā on Pāṇ. IV, 1, 173. 12b तवा Bu. 13b विवृत्तचक्र° E.—तवा Bu.—See Hir. II, 1, 3; Āśv. I, 14, 7; Pār. I, 15, 8. 14 पुँसुव° Bu. Wh. H. T. पुँसुव° E. B.

आभिष्ट्वाहं दशभिरभि मृशामि दशमास्याय सूतवे ॥१५॥
यथैव सोमः पवते यथा समुद्र एजति ।
एवं ते गर्भ एजतु सह जरायुणा निष्क्रम्य प्रति तिष्ठत्वायुषि ब्रह्मवर्चसि यशसि वीर्येऽऽन्नाद्ये ॥१६॥
दश मासाञ्छशयानो धाता हि तथा कृतम् ।
ऐतु गर्भो अक्षितो जीवो जीवन्त्याः ॥१७॥
आयमनीर्यमयत गर्भमापो देवीस्सरस्वतीः ।
ऐतु गर्भो अक्षितो जीवो जीवन्त्याः ॥१८॥
तिलदेऽवं पद्यस्व न मांसमसि नोदलम् ।
स्थविष्यवं पद्यस्व न मांसेषु न स्नावसु न बद्धमसि मज्जसु ॥१९॥
निरैतु पृश्नि शेवलं शुने जरायृत्तवे ॥२०॥

15 °मि दशमास्याय E.—See Hir. II, 2, 5. 16a सोमः पवति B.—See Hir. II, 3, 1. 16b एवं ते E. एवं त्वं Wh.—गर्भ एजतु E.—जारायुणा E. रायुणा Bu.—तिष्ठत्वायुषि Bu. — यशसि वीर्ये E. 17b and 18b एतु E. 19a तिलदेवं B. तिलदेवं E. — मांसदसि नोदलं E. मांसदसि नोदकं T. °समसि नोदलं B. It may be णो दलं, but Haradatta explains नोदलं = ná událam = ná udáram. See Introd., p. xxiv, and Hir. II, 3, 3. 19b स्थविष्यवं B.—°सेषु न E.—बद्धमसि न मज्जसु E. 20 निरैतु B.—शेवलं etc. Av. I, 11, 4. शेवलं शुने (शुनो B.) जराय्वत्तवे B. E. शेवं शुने जरायुवत्तवे Bu. See also Pār. I, 16, 2.—I have followed Haradatta in dividing Mantras 16–20. According to Sudarśanārya (on Āp. 14, 14 and 15), Mantra 16 ends with प्रति तिष्ठतु, 17 with तथा कृतम्, 18 with सरस्वतीः, 19 begins with ऐतु गर्भो, and 20 begins with स्थविष्यव.

दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः ॥२१॥
विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते सद्म विभृतं पुरुत्रा ।
विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ ॥२२॥
समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन् ।
तृतीये त्वा रजसि तस्थिवांसमृतस्य योनौ महिषा अहिन्वन् ॥२३॥
अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥२४॥
उशिक् पावको अरतिः सुमेधा मर्तेष्वग्निरमृतो नि धायि ।
इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षत् ॥२५॥
विश्वस्य केतुर्भुवनस्य गर्भ आ रोदसी अपृणाज्जायमानः ।
वीडुं चिदद्रिमभिनत्परायञ्जना यदग्निमयजन्त पञ्च ॥२६॥
श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः ।
वसोः सूनुः सहसो अप्सु राजा वि भात्यग्र उषसामिधानः ॥२७॥
यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने ।
प्र तं नय प्रतरां वस्यो अच्छाभि द्युम्नं देवभक्तं यविष्ठ ॥२८॥

21–31 The MSS. of the text have only दिवस्परीत्येषोऽनुवाकः ॥ This is, as Haradatta's commentary shows, Ts. IV, 2, 2 (not Rv. X, 45). Āp. 15, 1 refers to it by वात्सप्रेण. 22 Hw. reads consistently वित्मा and वित्म for विद्मा, also सत्म for सद्म. 27 b H. remarks that वसोः stands for वसुः, the reading of the Bahvṛcas.

आ तं भज सौश्रवसेष्वग्न उक्थउक्थ आ भज शस्यमाने ।
प्रियस्सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः ॥२९॥
त्वामग्ने यजमाना अनु द्यून्विश्वा वसूनि दधिरे वार्याणि ।
त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो वि वव्रुः ॥३०॥
दृशानो रुक्म उर्व्या व्यद्यौदुर्मर्षमायुः श्रिये रुचानः ।
अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः ॥३१॥
अस्मिन्नहं सहस्रं पुष्याम्येधमान स्वे वशे ॥३२॥
अङ्गादङ्गात्सं भवसि हृदयादधि जायसे ।
आत्मा वै पुत्रनामासि स जीव शरदश्शतम् ॥३३॥

एकादशः खण्डः ॥११॥

अश्मा भव परशुर्भव हिरण्यमस्तृतं भव ।
पशूनां त्वा हिंकारेणाभि जिघ्राम्यसौ ॥१॥
मेधां ते देवस्सविता मेधां देवी सरस्वती ।
मेधां ते अश्विनौ देवावा धत्तां पुष्करस्रजा ॥२॥

32 °धमानाः E. °धमाना Wh. T. 33b पुत्रनामा° E.—See Hir. II, 3, 2; Âśv. I, 15, 9; Pār. I, 18, 2; MBr. I, 5, 17; Bṛh. Up. VI, 4, 8; 26.—एकादशः खण्डः ॥ Wh. ॥११॥ Bu. धाता ददातु नो रयिं विंशतिः ॥११॥ E. B. II, 12, 1a See MBr. I, 5, 18; Hir. II, 3, 2; Pār. I, 16, 18; Âśv. I, 15, 3; Bṛh. Up. VI, 4, 26. 1b जिघ्राम्यसौ B.—See MBr. I, 5, 19; Pār. I, 18, 4. 2b मे अश्विनौ B. तेश्विनौ Bu.—See MBr. I, 5, 9; Âśv. I, 15, 2; Rv.-Ms., fol. 56a; Rv. Khila 29, 2.

त्वयि मेधां त्वयि प्रजां त्वय्यग्निस्तेजो दधातु ॥३॥
त्वयि मेधां त्वयि प्रजां त्वयीन्द्र इन्द्रियं दधातु ॥४॥
त्वयि मेधां त्वयि प्रजां त्वयि सूर्यो भ्राजो दधातु ॥५॥
क्षेत्रियै त्वा निर्ऋत्यै त्वा द्रुहो मुञ्चामि वरुणस्य पाशात् ।
अनागसं ब्रह्मणे त्वा करोमि शिवे ते द्यावापृथिवी उभे इमे ॥६॥
शं ते अग्निस्सहाद्भिरस्तु शं द्यावापृथिवी सहौषधीभिः ।
शमन्तरिक्षँ सह वातेन ते शं ते चतस्रः प्रदिशो भवन्तु ॥७॥
या दैवीश्चतस्रः प्रदिशो वातपत्नीरभि सूर्यो विचष्टे ।
तासां त्वा जरस आ दधामि प्र यक्ष्म एतु निर्ऋतिं पराचैः ॥८॥
अमोचि यक्ष्माद्दुरितादवर्त्यै द्रुहः पाशान्निर्ऋत्यै चोदमोचि ।
अहा अवर्तिमविदत्स्योनमप्यभूद्भद्रे सुकृतस्य लोके ॥९॥
सूर्यमृतं तमसो ग्राह्या यद्देवा अमुञ्चन्नसृजन्व्येनसः ।
एवमहमिमं क्षेत्रियाज्जामिशँसाद्द्रुहो मुञ्चामि वरुणस्य पा-
शात् ॥१०॥

भूः स्वाहा भुवः स्वाहा सुवः स्वाहोँ स्वाहा ॥११-१४॥

द्वादशः खण्डः ॥१२॥

6 10 See TBr. II, 5, 6, 1-3; Av. II, 10; Hir. II, 3, 10-4, 1. 6b अनागसं B. 8a दैवीश्च॰ Wh.—॰रभी Bu.—सूर्यो वि चष्टे B. सूर्यो विचष्टे Bu. 8b तासां त्वा B. E. TBr. l.c. तासां त्वा (tvā = tvā + á) H. 10a व्येनसः B. E. 14 द्वादशः खण्डः ॥ Wh. ॥१२॥ Bu. अरमां भव योऽर्द्ध ॥१२॥ E. B.

मा ते कुमारं रक्षो वधीन्मा धेनुरत्यासारिणी ।
प्रिया धनस्य भूया एधमाना स्वे गृहे ॥१॥
अयं कुमारो जरां धयतु दीर्घमायुः ।
तस्मै त्वं स्तन प्र प्यायायुर्वर्चो यशो बलम् ॥२॥
यद्भूमेर्हृदयं दिवि चन्द्रमसि श्रितम् ।
तदुर्वि पश्यं माहं पौत्रमघं रुदम् ॥३॥
यत्ते सुसीमे हृदयं वेदाहं तत्प्रजापतौ ।
वेदाम तस्य ते वयं माहं पौत्रमघं रुदम् ॥४॥
नामयति न रुदति यत्र वयं वदामसि यत्र चाभिमृशामसि ॥५॥
आपस्सुप्तेषु जागृत रक्षांसि निरितो नुदध्वम् ॥६॥
अयं कलिं पतयन्तं श्वानमिवोद्वृद्धम् ।

II, 13, 1a °रत्यासारिणी Bu. Wh. H. T. °रत्याचारिणी E. °रत्याचारिणी B. P. °रतिसारिणी Hir. II, 4, 2. 2b तस्मै Wh. Hw. यस्मै B. E. Bu. T.—स्तनं B. P. Hir. II, 4, 3. Cf. Rv.-Ms., fol. 56a. 3b रुदं E.—Cf. Hir. II, 3, 8. 4a सुसीमे हृदयं H. सुसीमे हृदयं Wh. T. सुषीमे हृदयं B. सुषीमे हृदये E. P. सुसीमेर्हृदयं Bu. Cf. Hir. II, 3, 8; MBr. I, 5, 10; Āśv. I, 13, 7; Pār. I, 11, 9.—वदाहं E. 4b रुदं E. 5 वदामसि and चाभिमृशामसि, accents by conjecture. वदामसि and चाभि मृशामसि B. E.—See Hir. II, 4, 5; Pār. I, 16, 25. 6 आयत B. E. T. आयता प्रबुद्धा भवत Hbd. The Grantha MSS. do not distinguish between य and गृ, hence we may read आयत or जागृत in Bu. Wh. Hw. Hbg. HHg. See Hir. II, 4, 5; Pār. I, 16, 22.—निरुक्षतो Wh. 7a °न्तं श्वानमिवोद्वृद्धं E.

अजां वाशितामिव मरुतः पर्याध्वँ स्वाहा ॥७॥
शण्डेरथश्शण्डिकेर उलूखलः ।
च्यवनो नश्यतादितः स्वाहा ॥८॥
अयश्शण्डो मर्क उपवीर उलूखलः ।
च्यवनो नश्यतादितः स्वाहा ॥९॥
केशिनीश्श्वलोमिनीः खजापोऽजोपकाशिनीः ।
अपेत नश्यतादितः स्वाहा ॥१०॥
मिश्रवाससः कौबेरका रक्षोराजेन प्रेषिताः ।
ग्रामँ सजानयो गच्छन्तीच्छन्तोऽपरिदाकृतान्स्वाहा ॥११॥
एतान्घ्नतैतान्गृह्णीतेत्ययं ब्रह्मणस्पुत्रः ।
तानग्निः पर्यसरत्तानिन्द्रस्तान्बृहस्पतिः ।
तानहं वेद ब्राह्मणः प्रमृशतः कूटदन्तान्विकेशाँल्लम्बनस्तना-
न्स्वाहा ॥१२॥

त्रयोदशः खण्डः ॥१३॥

7b वाशितमिव E.—पर्य्याध्वं Bu. पर्य्याध्वं Wh. पर्याधँ T. 8a शण्डेरथः (?) H. शंडे रथः B. E. 9a अयः B. अयः E.—शंडोयमर्क E.—Cf. Hir. II, 3, 7; Pār. I, 16, 23. 10a केशिनीः B. केशिनी E. केशिनि Bu.—खजापो B. Bu. Wh. H. T. सखजाः पो E.—°काशिनी B. E.—Cf. Hir. II, 3, 7. 10b नश्यतादितः E. 11a प्रेषिताः Bu. 11b °च्छन्तोपरिदाकृतान् स्वा° Bu. Wh. H. °च्छतीपरिदाकृतांस्वा° (त्स्वा sec. m.) B. °च्छन्तीपवितांकृतांत्स्वा° E. See Hir. l.c. 12a ब्रह्मण-स्पुत्रः B. ब्रह्मणस्पुत्रः E. ब्रह्मणः पुत्रः Wh. 12c ब्राह्मण B.—प्रमृशतः कू° B.

नक्तंचारिण उरस्पेशाञ्छूलहस्तान्कपालपान् ।
पूर्व एषां पितेत्युच्चैःश्राव्यकर्णकः ।
माता जघन्या सर्पति ग्रामे विधुरमिच्छन्ती स्वाहा ॥१॥
निशीथचारिणी स्वसा सन्धिना प्रेक्षते कुलम् ।
या स्वपन्तं बोधयति यस्यै विजातायां मनः ।
तासां त्वं कृष्णवर्त्मने क्लोमानं हृदयं यकृत् ।
अग्ने अक्षीणि निर्दह स्वाहा ॥२॥
अङ्गादङ्गात्सं भवसि हृदयादधि जायसे ।
वेदो वै पुत्रनामासि स जीव शरदःशतम् ॥३॥
अश्मा भवेत्येषा ॥४॥

अग्निरायुष्मान्त्स वनस्पतिभिरायुष्मान् । तेन त्वायुषायुष्मन्तं करोमि ॥५॥

सोम आयुष्मान्त्स ओषधीभिरायुष्मान् । तेन - - - - ॥६॥

प्रमृशतः कु॰ E.—See Hir. l.c.—त्रयोदशः खण्डः Wh. ॥१३॥ Bu. मा ते कुमारं त्रयोविंशतिः ॥१३॥ E. B. II, 14, 1a उरस्पेशाञ्छू॰ Bu. उरस्पेशांछू॰ B. E. See Hir. l.c. 1c अघन्या सर्पति E.—विधुर॰ B. 2b बोधयन्ति E. P. 2c कृष्णवर्त्मने B. हे कृष्णवर्त्मने कृष्णवर्त्मन् H. See Introd., p. xxv. 2d अक्षीणि निर्दह B. अक्षीणि निर्दहत् E. P. 3b पुत्रनामा॰ E. See II, 11, 33. 4 See II, 12, 1. 5–9 The MSS. of the text have अग्निरायुष्मानिति पञ्च ।, and H. explains the *five* Mantras as given from Ts. II, 3, 10, 3. (So also in P.T.) The Mantra पितर आयुष्मन्तस्ते स्वधयायु॰ etc. is only mentioned in Hw., not in Hbd. Hbg. HHg. See also Pār. I, 16, 6; Hir. II, 4, 18.

यज्ञ आयुष्मान्स दक्षिणाभिरायुष्मान्। तेन .... ॥७॥

ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्। तेन .... ॥८॥

देवा आयुष्मन्तस्तेऽमृतेनायुष्मन्तः। तेन त्वायुषायुष्मन्तं करोमि ॥९॥

सर्वस्मादात्मनस्संभूतासि सा जीव शरदश्शतम् ॥१०॥

भूरपां त्वौषधीनाँ रसं प्राशयामि। शिवास्त आप ओषधयस्सन्त्वनमीवास्त आप ओषधयस्सन्त्वसौ ॥११॥

भुवोऽपां त्वौ° .... ॥१२॥

सुवरपां त्वौ° .... ॥१३॥

भूर्भुवस्सुवरपां त्वौषधीनाँ रसं प्राशयामि। शिवास्त आप ओषधयस्सन्त्वनमीवास्त आप ओषधयस्सन्त्वसौ ॥१४॥

उष्णेन वायवुदकेनेत्येषः ॥१५-२२॥

चतुर्दशः खण्डः ॥१४॥

यद्भूमेः क्रूरं तदितो हरामि पराचीं निर्ऋतिं निर्वाहयामि। इदँ श्रेयोऽवसानमागन्म देवा गोमदश्वावदिदमस्तु प्र भूमं ॥१॥

11 b शिवाख्ता, and °मीवाख्ता T.—सन्त्वसौ E. 12–13 भुवोपाँ (°पां B.) स्वरपां B. E. T. भुवोपां सुवरपां Wh. Bu. 14 a सुवरपां Wh. Bu. स्वरपां B. E. T. 15–22 = II, 1, 1–8. See II, 7, 4–11. — चतुर्दशः खण्डः ॥ Wh. ॥१४॥ Bu. ॥१४॥ नक्षत्रचारिणीचतुर्दश ॥१४॥ E. B. II, 15, 1 b देवा B.—प्र भूम B. प्रभूः Bu.

स्योना पृथिवि भवानृक्षरा निवेशनी ।
यच्छा नः शर्म सप्रथाः ॥२॥
इहैव तिष्ठ निमिता तिल्विला स्यादिरावती ।
मध्ये ताल्प्यस्य तिष्ठन्मा त्वा प्रापन्नघायवः ॥३॥
आ त्वा कुमारस्तरुण आ वत्सो जगता सह ।
आ त्वा परिस्रुतः कुम्भा आ दध्नः कलशैरयन् ॥४॥

ऋतेन स्थूणावधि रोह वंशोग्रो विराजन्नप सेध शत्रून् ॥५॥

ब्रह्म च ते क्षत्रं च पूर्वे स्थूणे अभि रक्षतु ॥६॥

यज्ञश्च दक्षिणाश्च दक्षिणे ॥७॥ इषश्चोर्जश्चापरे ॥८॥ मित्रश्च वरुणश्चोत्तरे ॥९॥ धर्मस्ते स्थूणाराजः ॥१०॥ श्रीस्ते स्तूपः ॥११॥
उद्ध्रियमाण उद्धर पाप्मनो मा यदविद्वान्यच्च विद्वांश्चकार ।

2a पृथिवी (°वि sec. m.) भवा° B. पृथिवि भवा° E. पृथिवो भवा° Wh. Bu. See TÂ. X, 1, 10; Rv. I, 22, 15; MBr. II, 2, 7.—निवेशिनि Bu. 3a तिष्ठंनिमिता E. तिष्ठ नि° B. तिष्ठन्निमिरा Wh.—तिल्विला B. तिल्धिरा E. नितिल्पिला Bu.—स्यादिरा° B. See Introd., p. xxv. 3b ताल्प्यस्य Bu. Hw. T. ताल्पस्य B. Wh. Hbg. ताल्बास्य E. Deest in Hbd. HHg. 4a जायतां सह E. See Âśv. II, 8, 16; Pâr. III, 4, 4; Hir. I, 27, 4; Av. III, 12, 7. 4b परिस्रुतः Bu.—कुंभाः H. Wh. T. कुभा Bu. कुंभ E. कुंभ B.—दध्नकलशीरयन् E. 5 °जन्नप शेध E. °जंतप सेघ (सेध sec. m.) B. See Av. III, 12, 6a; Hir. I, 27, 7; Âśv. II, 9, 2. 6 पूर्वस्थूणे E.—रक्षन्तु E. 7 दक्षिणा B. E. 9 °श्चोत्तरे B. 10–11 °राजश्रीस्ते स्तूपः (स्तूर्यः E.) B. E. Wh. Bu. Cf. Pâr. III, 4, 18; Śânkh. III, 3, 3 seqq. 12a °श्चकार B. E.

अह्ना यदेनः कृतमस्ति पापं रात्रिया यदेनः कृतमस्ति पापं सर्वस्मान्मोद्भृतो मुञ्च तस्मात् ॥१२॥

इन्द्रस्य गृहा वसुमन्तो वरूथिनस्तानहं सुमनसः प्र पद्ये ॥१३॥

अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य जित्यै ।
तयानन्तं काममहं जयानि प्रजापतिर्यं प्रथमो जिगायाग्निमग्नौ स्वाहा ॥१४॥

अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः ।
प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥१५॥

अरिष्टा अस्माकं वीरास्सन्तु मा परा सेचि मे धनम् ॥१६॥

भूमिर्भूमिमगान्माता मातरमप्यगात् ।
भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम् ॥१७॥

वास्तोष्पते प्रति जानीह्यस्मान्स्वावेशो अनमीवो भवा नः ।
यत्त्वेमहे प्रति तन्नो जुषस्व शं न एधि द्विपदे शं चतुष्पदे ॥१८॥

वास्तोष्पते शग्मया संसदा ते सक्षीमहि रण्वया गातुमत्या ।
आवः क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिस्सदा नः ॥१९॥

12b कृतमस्ति (*bis*) B. E.—रात्रिया B. E, Wh. Bu. रात्र्या H.—सर्वस्मान्मोधृतो E. 13 Cf. Pār. III, 4, 18; S'āṅkh. III, 4, 10. 14a जुहोम्य° Bu. 14b जयामि E.—°ग्निमग्नौ E. 15 The MSS. of the text give only the Pratīka, अन्नपत इत्येषा ॥ See Ts. IV, 2, 3, 1; V, 2, 2, 1; TBr. III, 11, 4, 1. 16 नो ध° T.—Cf. Pār. I, 3, 14; S'āṅkh. III, 4, 4. 17 Cf. Kaus'. 136, 2. 18-19 The MSS. of the text have वास्तोष्पत इति द्वे ॥ H. explains the Mantras as given from Ts. III, 4, 10, 1; cf. Rv. VII, 54, 1, and 3.

वास्तोष्पते प्रतरणो न एधि गोभिरश्वेभिरिन्दो ।
अजरासस्ते सख्ये स्याम पितेव पुत्रान्प्रति नो जुषस्व ॥२०॥
अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् ।
सखा सुशेव एधि नः ॥२१॥
शिवँ शिवम् ॥२२॥

पञ्चदशः खण्डः ॥१५॥

कूर्कुरस्सुकूर्कुरः कूर्कुरो बालबन्धनः ।
उपरिष्टाद्यदेजाय तृतीयस्या इतो दिवः ॥१॥
औलब इत्तमुपा ह्वयथार्जीञ्छ्यामशबलः ।
अधोराम उलूखलस्सारमेयो ह धावति समुद्रमिव चाकशत् ॥२॥

See also Âśv. II, 9, 9; Pâr. III, 4, 7; Hir. I, 28, 1; Kauś. 43, 13. 20a एधि गो° Bu. H. T. एनधि गो° E. एधि गयस्फानो गो° B. See Rv. VII, 54, 2. In Wh., Mantras 20 to 22 are missing. 20b अजरासस्ते E. 21a वास्तोष्पति E.—Rv. VII, 55, 1. 22 पञ्चदशः खण्डः Wh. यन्नूमेः कूरँ षड्विँशतिः ॥१५॥ E. B. Bu. has ॥१५॥ *before* Mantra 22. II, 16, 1a कूर्कु (कु Hbg.) रस्सुकूर्कुरः कूर्कुरो बाल° Wh. Hbg. Hbd. कूर्कुरः स कूर्कुरः कूर्कुरो बाल° B. कूर्कुरसुकूर्कुरः कूरोर्कु बाल° E. कूर्कुरस्सुकूर्कुरः कूर्कुरो बाल° Bu. कुर्कुरः सुकूर्कुरः कूर्कुरः बाल° Hw. कुर्कुरः सुकुर्कुरः कुर्कुरः बाल° HHg. See Pâr. I, 16, 24; Hir. II, 7, 2. 1b °देजायत E. 2a औलव B.—इत्तमुपा E.—ह्वयताजीर्छामः शबलः B. ह्वयथाजींछाम शबलः E. ह्वयतार्जिन् श्यामशबलः Wh. ह्वयथार्जिछ्यामश° Bu. ह्वयथ, आर्जीन्, श्यामः H. ह्वयतार्जीञ्छ्यामश° T. 2b अधोराम E.—उलूंखलः Wh.. Bu. T. उलूंखल

विभ्रञ्जिष्कं च रुक्मं च शुनामयँ सुवीरणः ।
सुवीरण सृज सृज शुनक सृजैकव्रात्य सृज च्छत् ॥३॥

तत्सत्यं यस्येन्द्रोऽब्रवीन्ना स्पाशयस्वेति तास्त्वँ स्पाशयित्वागंच्छस्तं त्वाब्रवीदविद हा३ इत्यविदँ हीति वरं वृणीष्वेति कुमारमेवाहं वरं वृण इत्यब्रवीः ॥४॥

विगृह्य बाहू प्रवसे द्यामिव चाकशत् ॥५॥
विभ्रञ्जिष्कं च रुक्मं च शुनामयँ सुवीरणः ।
सुवीरण सृज सृज शुनक सृजैकव्रात्य सृज च्छत् ॥६॥

उदयनः H. उलुंबभः E. उदयनः B. — अव चाकशत् Hw. Hbg. Hbd. T., for इव चा°; HHg. has only चाकशत्, giving neither अव nor इव. Cf. Hir. II, 7, 2. 3a विभ्रंजि° E. विभ्रति जि° B pr. m. — सुवीरणः Wh. Hw. Hbg. सुवीरिणः E. Bu. HHg. T. सुवीरिणः B. Hbd. 3b सुवीरण Wh. Hw. सुवीरण Hbd. सुसूरिण Hbg. सुवीरिण Bu. HHg. T. सुवीरिण B. सुवीरिणः E. — °कव्रात्य B. °कवाक्य Bu. — Cf. Hir. II, 7, 2; Pār. I, 16, 24. 4 यत्सेन्द्रोऽब्र° B. E. यत्तेन्द्रोऽब्र° Wh. T. यत्सेन्द्रोऽब्र° Bu. — स्पाशयित्वागच्छतं B sec. m. °गच्छंतं B pr. m. स्पाधयित्वागच्छस्तं Bu. स्पाशयत्वागच्छस्तं Wh. — हा३ B. E. Bu. T. ह३ Wh. (The two Grantha MSS. have a peculiar sign somewhat resembling the Grantha श्य to mark the pluta vowel.) — वृणा इ° Wh. — °ब्रवीर्विगृह्य Bu. °ब्रवीद्विगृह्य B. E. °ब्रवीत् । विगृह्य Wh. त्वं च पुनरब्रवीः Hw. त्वं च पुनरब्रवीत् (sic) Hbd. Hbg. HHg. Cf. Pār. I, 16, 24; Hir. II, 7, 3-4. 5 प्रवसि B. — द्यांमिव Bu. Hw. ज्यामिव B. E. Wh. द्यामव T. Hbg. HHg. (deest in Hbd.). See Introd., p. xxv. 6a Only Bu. gives this verse in an abridged form, the other MSS. repeat it in full. सुवीरणः Wh. सुवीरिणः E. T. सुवीरिणः B. 6b सुवीरण Wh. सुवीरिण E. T. सुवीरिण B.

तत्सत्यं यत्ते सरमा माता रोहितः पिता ।
अमी ये के संरस्यका अवधावंति तृतीयस्या इतो दिवः ॥७॥
तेकश्च ससरमतण्डश्च तूलश्च वितूलश्चार्जुनश्च लोहितश्च ।
दुला ह नाम वो माता मन्याकको ह वः पिता ॥८॥
सं तच्चा हन्ति चक्री वो न सीसंरीदत ।
छदुपेहिं सीसरम सारमेय नमस्ते अस्तु सीसर ॥९॥
समश्वा वृषणः पदो न सीसंरीदत ।
छदुपेहिं सीसरम सारमेय नमस्ते अस्तु सीसर ॥१०॥
श्वानमिच्छादन्न पुरुषं छत् ॥११॥

7a रोहितः B. Wh. H. लोहितः E. T. लेहितः Bu.—Cf. Pār. I, 16, 24. 7b ये के सं° according to H. ये केस° B. E.—°धावत Bu. °धावंति B. Wh. T. °धावन्ति E. See Introd., p. xxvi, and Hir. II, 7, 2. 8a ससरमसंटश्च E. सरमतण्डः Hbd. सरमताण्डः Hbg. ससमतगुः HHg.—तुलश्च विकूल° Bu. कूलः विकूलः Hbg. Hbd.—°नश्चालोहितश्च E.—See Hir. l.c. 8b दूला ह B. दुला हा Bu.—मन्याकको ह Wh. Hbd. Hbg. HHg. T. ममन्याकको ह Bu. मंथाकको ह B. यथाककुह E. मन्याकः Hw.—See Hir. l.c. 9a सं तचा H. संतचा B. E. सञ्चचा Wh.—वो न सीसंरीदत MSS. I cannot make any sense of this, nor does Haradatta give any help, who says 'अतश्च' न सीसरीदत नोऽपसर्पत, leaving चः unexplained. See Hir. l.c., and Introd., p. xxvi. 9b and 10b छदुपेहि B.—सीसर for सीसरम Bu.—Cf. Pār. I, 16, 24. 10a समंश्वा वृषणः E. समश्वा वृषाणः B. °श्वा वृषाणः T.—पद्दो न सीसंरीद्दत B. पद्दोनसीसरीद्दत Bu. Wh. पद्दो न सीसंरीद्दत E. See above 9a. 11 श्वानमिच्छादन्न पुरुषं E. श्वानमिच्छादन्नपुरुषं B. °मिच्छा° Wh.

एते ते प्रति दृश्येते समानवसने उभे ।
ते अहं सारयेण मुसलेनाव हन्म्युलूखले ॥१२॥
हतश्शङ्खो हतश्शङ्खपिता हतश्शङ्खकुतुर्वकः ।
अथैषां स्थपतिर्हतः ॥१३॥
ऋषिर्बोधः प्रबोध स्वप्नो मातरिश्वा ।
ते ते प्राणान्त्स्परिष्यन्ति मा भैषीर्न मरिष्यसि ॥१४॥
जग्धो मशको जग्धा वितृष्टिर्जग्धो व्यध्वर स्वाहा ॥१५॥
जग्धो व्यध्वरो जग्धो मशको जग्धा वितृष्टि स्वाहा ॥१६॥
जग्धा वितृष्टिर्जग्धो व्यध्वरो जग्धो मशक स्वाहा ॥१७॥
षोडशः खण्डः ॥१६॥

इन्द्र जहि दन्दशूकं पक्षिणं यस्सरीसृपः ।

12a एते ते B. E.—समानमसने E. 12b हम्म्युलूखले B sec. m. T. हम्मु° B pr. m. हन्युलूखले E. Wh. हमुलू° Bu. 13a शंखकुतुर्वकः Bu. H. T. शंखः कुतुर्व (or र्वे)कः Wh. शंखकुघुर्बलः B. शङ्खकुर्तुर्बकः E. 14a ऋषिर्बोधः प्रबोधः E. ऋषिर्बोध-प्रबोध Bu. 14b प्राणान् सरिष्यन्ति Bu. H. °णान्त्स्फरि° T. प्राणान् सरिष्यन्ति Wh. प्राणान् सरिष्यन्ति B. प्राणात्सरिष्यन्ति E.—मा भैषीर्न मरिष्यसि B. मो भैषीर्न मभरिष्यसि E. 15 जग्धा वितृष्णिर्जग्धो व्यध्वर व्यतृष्टिः स्वाहा B.—Cf. Hir. II, 16, 5. 16 जग्धो मशको जग्धो व्यध्वरो Bu.—जग्धा B. 17 जग्धो व्यध्वरो जग्धा पितृष्टिर्जग्धो म° Bu.—षोडशः खण्डः Wh. ॥१६॥ Bu. कुर्कुरः पंचविंशतिः ॥१६॥ B. कूकुरः पञ्चविंशतिः ॥१६॥ E. II, 17, 1a इन्द्र जहि, accents by conjecture. इन्द्रं जहि B. E.—दन्तशूकं Wh. Hbg. HHg.—सरीसृपः E.

